৬৭০

# न्यायतत्त्व-प्रबोधिनी

पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्त-भट्टाचार्य्येण

प्रणीता

नवद्वीपनिवासिना तदात्मजेन श्रीसर्व्वेश्वर भट्टाचार्य्येण

प्रकाशिता

द्वितीय-संस्करणम्

कलिकाताराजधान्याम्

...শরে... উক্ত পুস্তক নিঃশে-
হওয়ায় পুনর্ব্বার মুদ্রিত করিলাম। ইতি

২নং ...দীপ
... ১৮১২
... পৃষ্ঠ

প্রকাশক
শ্রী সর্ব্বেশ্বর শর্ম্মা

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

১৭৭৩





# বিজ্ঞাপন।

এই পুস্তক খানি পরমপূজ্যপাদ মদীয় পিতৃদেব ৺ হরিনাথ তর্কসিদ্ধান্ত মহাশয়ের রচিত। এতদ্দেশীয় ন্যায়শাস্ত্রাধ্যায়িগণের মধ্যে প্রায় অনেকেরই ন্যায়সূত্রের প্রকৃত রসাস্বাদনে বঞ্চিত থাকিতে হয়। তাহার কারণ ন্যায়সূত্র অতিদুরূহ গ্রন্থ, সহজে অর্থগ্রহ হয় না। এজন্য ভাষ্যাদি গ্রন্থ সমালোচনা করিয়া ন্যায়সূত্রের ভাবার্থ সংগ্রহ পূর্ব্বক সরল শব্দে "ন্যায়তত্ত্ব-প্রবোধিনী" নামক এই গ্রন্থ খানি প্রচার করিয়াছেন। এবং বর্ত্তমান সময়ে ন্যায়শাস্ত্র পাঠার্থিদিগের পঠনার্থ যে সমস্ত পুস্তক প্রচলিত আছে, তাহা প্রায়ই ন্যায় ও বৈশেষিক মত অবলম্বনে রচিত। সুতরাং কেবল ন্যায় দর্শনের মত সংগ্রহ করাই গ্রন্থকারের মুখ্যতম উদ্দেশ্য। সময়াভাব প্রভৃতি নানা কারণ বশতঃ এই গ্রন্থ খানি সমাপ্ত হয় নাই। ইতিপূর্ব্বে এই গ্রন্থ পরম শ্রদ্ধাস্পদ পূজ্যপাদ পণ্ডিতপ্রবর শ্রীযুক্ত ঈশ্বর চন্দ্র বিদ্যাসাগর মহাশয়ের সাহায্যে মুদ্রিত হয়। উক্ত পুস্তক নিঃশেষিত হওয়ায় পুনর্ব্বার মুদ্রিত করিলাম। ইতি

নবদ্বীপ
শকাব্দা ১৮১২
২৫ জ্যৈষ্ঠ



প্রকাশক
শ্রী সর্ব্বেশ্বর শর্ম্মা

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# न्यायतत्त्वप्रबोधिनी।

ओं नमः शिवाय॥ रचयन्निदमद्भुतमखिलं सुहुरतियोजनकौशलेन चतुर्णाम्। लोचनगत इव भाति योऽनु मया गतः शिवो नमस्तस्मै॥ भाष्यादिकं समालोच्य समास्वाद्य च चिन्तनैः। क्रियते हरिनाथेन न्यायतत्त्वप्रबोधिनी॥ प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानान्येते षोड़शपदार्था निःश्रेयस्साधनतत्त्वज्ञानाय महर्षिगौतमेनोपदिष्टाः॥ तत्र प्रमाणं प्रमीयतेऽनेनेति व्युत्पत्त्या प्रमायाः करणं प्रमा च स्मृत्यन्यभ्रमभिन्नज्ञानं करणञ्च व्यापारप्रत्यासत्त्या कारणं संस्कारद्वारा स्मृतिजनकेऽनुभवेऽतिव्याप्तिवारणाय स्मृत्यन्येति। तच्च चतुर्व्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्। अत्र प्रतिगतं प्रतिगमकं वा अक्षमिन्द्रियमिति व्युत्पत्त्या सिद्धः प्रत्यक्षशब्दः प्रत्यक्षप्रमितिकरणं बोधयति। तत्र प्रत्यक्षप्रमा च इन्द्रियाणामर्थेन सम्बन्धादुत्पद्यमानं निर्णयात्मकं यथार्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानं। यथा अयं गन्धः इयं पृथिवीत्यादि। अयं स्थाणुर्न्न वेत्यादिसंशयमरीचिकादिधर्म्मिकजलज्ञानादिवारणाय निश्चयेत्यादि॥ नव्यास्तु प्रत्यक्षं द्विविधं निर्व्विकल्पकं सविकल्पकञ्चेति तत्र सम्बन्धानवगाहि ज्ञानं निर्व्विकल्पकं। यथा घटघटत्वे इत्याद्याकारकं सविकल्पकञ्च सम्बन्धावगाहि। यथा अयं घट इत्याद्याकारकमिति विभजन्ति। केचित्तु ज्ञानाकरणकं ज्ञानं प्रत्यक्षं अनुमित्यादेर्व्याप्त्यादिज्ञानकरणकत्वेन न तत्रातिव्याप्तिरितिनात्ममनःसंयोगजन्यायामात्मानुमितावतिव्याप्तिः सन्निकर्षत्वस्यानुगतस्याभावादननुगमो दोष इति परास्तमित्याहुः॥ सन्निकर्षोऽपि संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसमवायसमवेतसमवायविशेषणताभेदेन षड् विधः तैश्च क्रमेण पृथिवीगुणगुणत्वशब्दशब्दत्वाभावादय उपलभ्यन्ते॥ अनुमानन्तु अनुमितेः करणं तच्च व्याप्यत्वेन ज्ञायमानं लिङ्गं व्याप्तिप्रकारकलिङ्गज्ञानं वा तस्य व्यापारः परामर्शः स च पक्षे व्याप्तिविशिष्टहेतुवैशिष्टयज्ञानम्। हेतौ व्याप्तिज्ञानञ्च साध्यसाधनसहचारादिदर्शनादेव भवति अतः सूत्रे तत्पूर्व्वकमनुमानमुक्तं तस्य च प्रत्यक्षप्रयोज्यमर्थः। तच्च त्रिविधं पूर्व्ववच्छेषवत्सामान्यतो दृष्टञ्चेति। तत्राद्यं येन कारणेन कार्य्यमनुमीयते तत्। यथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कालोऽयं वृष्टग्रा सम्पत्स्यते मेघोन्नतिमत्वात् अयं सुख-दुःखान्यतरवान् देहवत्त्वादित्यादि। द्वितीयन्तु येन कार्य्येण कारणमनुमीयते तत्। यथा वह्निमान् धूमादित्यादि। ताभ्यामन्येन येन हेतुना अनुमीयते तत् तृतीयम्। यथा द्रव्यं पृथिवीत्वादित्यादि॥ अथवा पूर्व्वमिव पूर्व्ववत्। तथाच यत्र कुत्रचित् यादृशं साध्यं साधनञ्च दृष्टं अनन्तरं तादृशसहचारग्रहाधीनव्याप्ति-ग्रहेण तादृशहेतुना तादृशसाध्यस्यानुमितिः तत् पूर्व्ववदनुमानं। यथा पर्व्वतोऽयं वह्निमान् धूमादित्यादि। अत्र महानसादौ वह्निधूमयोः सहचारदर्शनतो गृहीतव्याप्तिकेन धूमेन पर्व्वते अप्रत्यक्षीभूतस्य वह्नेरनुमितिः॥ शेषवत्तु शिष्यते इति शेषः स्वज्ञान-जनकज्ञानविषयत्वसम्बन्धेन स यत्रास्तीति शेषवत् परिशेषानुमापकमिति तु फलितं। तथाच यत्र हेतौ सामान्यधर्म्मावच्छिन्नस्य व्याप्तिनिश्चयतो व्यापकता-वच्छेदकव्याप्येन केनचित् बाधनिश्चयसहकारेण अव-शिष्टावान्तरधर्म्मेणानुमितिः। यथा शब्दः सन् जन्यत्वे सति भावत्वादित्यादौ सत्तावच्छिन्नव्याप्यजन्यभावत्व-वान् शब्द इति निर्णयः, शब्दो न द्रव्यं एकमात्रसमवेत-त्वात्, नापि कर्म्म, संयोगाजनकत्वादित्यादिना द्रव्य-कर्म्मभेदसिद्धावविशिष्टं गुणं तादात्म्येन शब्दे साध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यति। सामान्यतो दृष्टन्तु यत्र अप्रत्यक्षे प्रकृतसाध्य-साधनयोर्व्याप्यत्वे कस्यचित् लिङ्गनिष्ठसामान्यधर्मस्य व्याप्तिनिश्चयात् कस्यचिदर्थस्य सहकारेण अप्रत्यक्षस्य साध्यस्य सिद्धिर्भवति। यथा आत्मसिद्धाविच्छादयः। तत्र इच्छादयो द्रव्याश्रिता गुणत्वात् ते च न पृथिव्याद्यष्टवृत्तयः वहिरिन्द्रियाग्राह्यविशेषगुणत्वादित्यादिना तदष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वसिद्धावात्मसिद्धेरिति। नव्यास्तु विभाजकसूत्रं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन विभजनपरं तत्र साध्यहेत्वोः सहचारज्ञानमात्रेण यत्र व्याप्तिज्ञानं जायते तत् केवलान्वयि। यथा घटोऽभिधेयः प्रमेयत्वादित्यादि। यत्र साध्यसाधनविरहयोः सहचारज्ञानमात्रात् व्याप्तिग्रहो जायते तत् केवलव्यतिरेकि। यथा पृथिवी इतरेभ्यो भिद्यते गन्धात् तत्र जलादौ पृथिवीभेदगन्धाभावयोः सहचारदर्शनादेव व्याप्तिर्गृह्यते। पृथिव्यां साध्यसंशयात्। यत्रो भयसहचारज्ञानेन व्याप्तिर्निर्णीयते तदन्वयव्यतिरेकि। यथा वह्निमान् धूमादित्यादि इत्याहुः। व्याप्तिश्च लिङ्गलिङ्गिनोः सम्बन्धविशेषः। स चान्वयतः साध्यवदन्यावृत्तित्वरूपो हेतुव्यापकसाध्यसामानाधिकरण्यरूपो वा। व्यतिरेकतश्च साध्याभावव्यापकाभावप्रतियोगित्वरूपः॥ उप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानं उपमितेः करणं तच्च मुद्गपर्ण्यादौ मुद्गादेः सादृश्यज्ञानं व्यापारस्तु मुद्गसदृशी मुद्गपर्णीपदार्थ इत्य-तिदेशवाक्यार्थस्मरणं फलन्तु मुद्गपर्ण्यादिपदानां तत्त-दौषध्यादिषु शक्तिग्रहः । यथा केनचिद्वृद्धेन मुद्ग-सदृशी मुद्गपर्णीत्युपदिष्टः कश्चित् पुरुषो वनं गत्वा मुद्गपर्णीं पश्यन् इयं मुद्गसदृशी इति प्रत्यक्षतस्तां निश्चित्य तादृशवाक्यार्थस्मरणेन इयमोषधी मुद्गपर्णी-पदार्थः इत्यवधारयति पश्चादौषधार्थं तामानयति । एवं गोसदृशगवयादिष्वपि ज्ञेयं । शब्दस्तु शब्द्यते प्रतिपद्यतेऽर्थोऽनेनेति व्युत्पत्त्या शाब्दप्रमितेः करणं तच्चाप्तोच्चरिताकाङ्क्षादिमत्पदसमूहरूपं । आप्तस्तु वाक्यार्थगोचरयथार्थज्ञानयुक्तः । शङ्खपीत इति भ्रान्त-पुरुषीयवाक्यजन्यबोधे वारणायाप्तेति । तत्र वृत्ति-ज्ञानजन्यपदार्थोपस्थितिर्व्यापारः शाब्दबोधः फलं । योग्यताज्ञानादिकन्तु सहकारि । वृत्तिस्तु सङ्केतलक्ष-णान्यतररूपा । तत्र सङ्केत इदं पदमिममर्थं बोध-यत्वित्याकारिका अस्मच्छब्दादयमर्थो बोद्धव्य इत्या-कारिका वा इच्छा । सङ्केतोऽपि द्विविधः शक्तिः परिभाषा चेति तत्र नित्यः सङ्केतः शक्तिः । यथा गवाद्यर्थेषु गोपदादीनां । आधुनिकः सङ्केतः परि-भाषा । यथा पित्रादिसङ्केतितदेवदत्तादिपदानां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाणिन्यादिसङ्केतितनदीवृद्ध्यादिपदानां वा । लक्षणा तु शक्यसम्बन्धः । स चाश्रितत्वसामीप्यसादृश्यादिरूपः । यथा गुणिनि शुक्लादिपदानां गङ्गायां घोष इत्यातौ तीरादिषु गङ्गादिपदानां । अग्निर्माणवक इत्यादावग्निसदृशादिषु अग्न्यादिपदानां। स च शब्दो द्विविधो दृष्टार्थकोऽदृष्टार्थकश्चेति । तत्र शब्दं तदाश्रितप्रमाणं योगजधर्मञ्च विना यादृशार्थः प्रतीयते तादृशार्थको दृष्टार्थकः । यथा गामानय पचेतेत्यादि । तदर्थस्तु प्रत्यक्षादिनापि प्रतीयते । तदन्यः शब्दोऽदृष्टार्थकः । यथा स्वर्गकामोऽश्वमेधेन यजेत अग्निहोत्रं जुहूयात् स्वर्गकाम इत्यादि ॥ प्रमेयञ्च आत्माद्यन्यतमं मोक्षोपयोगिप्रमाविषय इति कश्चित् । तच्च आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन द्वादशविधं । वस्तुतो मोक्षोपयोगितयापाततः सूत्रकारेण एतावदुक्तं तथाच द्रव्यगुणकर्म्मसामान्यविशेषसमवाया अपि प्रमेयपदार्था बोध्याः। तत्रात्मा इच्छाश्रयो ज्ञानाश्रयो वा । स च द्विधा परमात्मा जीवात्मा चेति । परमात्मा तु नित्यज्ञानयत्नेच्छाश्रयः स्वतन्त्रो विभुरेको नित्यश्चेति । जीवात्मा च अदृष्टपरतन्त्रः शरीराधिष्ठाता जन्येच्छाप्रयत्नज्ञानाश्रयः सुखदुःखभोक्ता संसारी विभुरनेको नित्यश्चेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विभजन्ति केचित् ॥ शरीरन्तु चेष्टाश्रयः सुखदुःखान्य-
तराश्रयो वा। चेष्टा च माता इष्टमभीप्सन् हेयं वा
जिहासन् यद्व्यापृणोति तादृशव्यापारश्चेष्टा प्रयत्नजन्य-
तावच्छेदकजात्याश्रय इति यावत्। हस्तादेरशरीरत्वे
ग्रन्त्यवयवित्वेन विशेषणीयं। अथवा चेष्टावद्वृत्तिनि-
त्यावृत्तिजात्याश्रयः शरीरं एतेन चेष्टाशून्यखण्डशरी-
रादौ नाव्याप्तिः। तादृशजातिश्च मनुष्यत्वदेवदत्त-
त्वादि। पृथिवीत्वादिजातिमादायाति-व्याप्ति-वारणाय
नित्यावृत्तीति घटत्वादिजातयस्तु न चेष्टावद्वृत्तयो
नातस्ता आदायातिव्याप्तिः। तच्च सुखदुःखभोग-
साधनं। इन्द्रियञ्च स्मृत्यजनको ज्ञानजनको यो मनः-
संयोगः तदाश्रयः। चाक्षुषादौ चक्षुर्मनःसंयोगादेः
कारणतया चक्षुरादौ लक्षणसमन्वयः। आत्ममनःसंयो-
गस्य स्मृतेरपि कारणतया न तमादायात्मनि नाति-
व्याप्तिः। सुषुप्त्यादौ ज्ञानोत्पत्तिवारणाय अनुभवं
प्रति त्वङ्मनःसंयोगस्य ज्ञानं प्रति वा चर्म्ममनःसंयोगस्य
कारणत्वमतस्त्वचि नाव्याप्तिः। इन्द्रियसंयोगमादाय
घटादावतिव्याप्तिवारणाय मन इति। इन्द्रियञ्च
अभौतिकं भौतिकञ्चेति तत्र आद्यं मनोऽन्तरिन्द्रियं
द्वितीयन्तु बहिरिन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रो-
त्राणि पञ्च। भूतानि तु पृथिव्यप्तेजोवायुराका-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रमिति पञ्च। तत्र घ्राणं पार्थिवं रसनं जलीयं चक्षुस्तैजसं त्वक् वायवी। श्रोत्रन्तु कर्णशस्कुल्यवच्छिन्ननभोरूपं। अर्थाश्च इन्द्रियद्वयाग्राह्या वहिरिन्द्रियग्राह्यगुणाः। ते च गन्धरसरूपस्पर्शशब्दा इति पञ्च। तत्र गन्धो घ्राणेन्द्रियग्राह्यः पृथिव्यामेव। रसस्तु रसनाग्राह्यः पृथिवीजलयोरेव। रूपन्तु चक्षुर्ग्राह्यं पृथिव्यादित्रय एव। स्पर्शस्तु त्वगिन्द्रियग्राह्यः पृथिव्यादिचतुष्टय एव। शब्दस्तु श्रोत्रग्राह्य आकाश एव। बुद्धिस्तु जानामीति प्रत्ययसिद्धं ज्ञानमेव सैवोपलब्धिः। न तु अचेतनाया करणरूपाया बुद्धेर्वृत्तिर्ज्ञानं चेनतस्याकर्त्तुरुपलब्धिरिति युक्तिविरुद्धत्वादिति॥ सा च द्विधा स्मृतिरनुभवश्चेति। तत्र संस्कारजन्यं ज्ञानं स्मृतिः। प्रत्यभिज्ञायाञ्च तत्रास्मृतिरेव कारणं न तु तत्तत्संस्कारः अतो न तत्रातिव्याप्तिः। तद्भिन्नं ज्ञानमनुभवः। सोऽपि चतुर्व्विधः प्रत्यक्षमनुमितिरुपमितिः शाब्दश्चेति॥ तत्र प्रत्यक्षं प्रागुक्तं। अनुमितिस्तु व्याप्तिविशिष्टहेतुविषयकज्ञानकरणकं ज्ञानं। उपमितिस्तु सादृश्यज्ञानकरणकं ज्ञानं। तथा शाब्दोऽपि पदज्ञानकरणकं ज्ञानमिति। सुखादिसाक्षात्कारे करणं मनः। तच्च नित्यमणु च। यत एकदा गन्धे रूपादौ च सतीन्द्रियसंयोगे तदुभयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षानुत्पादात् तत्प्रयोजकं एकेन्द्रियमात्रसंयोगि-किञ्चिदावश्यकं यत्संयुक्तमिन्द्रियं प्रत्यक्षं जनयेत् असं-युक्तं नेति ॥ प्रवृत्तिस्तु अदृष्टहेतुः । सा च पुण्यहेतुः पापहेतुश्चेति द्विविधा तत्राद्या वाचकी मानसी कायिकी चेति त्रिधा । तथा द्वितीयापि । तत्र पुण्य-हेतुः सत्यं हितं प्रियं स्वाध्यायश्चेति । वाचिकं दया श्रद्धा स्पृहा चेति मानसं । दानं परित्राणं परिचरण-मिति शारीरिकं । पापहेतुश्च अनृतपरुषसूचनासम्ब-न्धानि वाङ्मयानि । परद्रोहः परद्रव्याभीप्सा नास्ति-क्यञ्चेति मानसत्रयं । हिंसा स्तेयं निषिद्धमैथुनानि शारीरिकाणि इति ॥ केचित्तु प्रवृत्तिः प्रयत्नः सा च कारणरूपा इत्याहुः । दोषस्तु प्रवृत्तिजनको गुण-विशेषः । स च त्रिधा रागद्वेषमोहभेदात् । तत्र राग उत्कटेच्छा । द्वेषः द्वेष्मीति प्रत्ययसिद्धो गुणविशेषः । मोहोऽज्ञानं देहादावात्मत्वादिबुद्धिः ॥ प्रेत्यभावस्तु पुन-रुत्पत्तिः । सा च उत्पन्नस्य मरणोत्तरं उत्पत्तिः । उत्पत्तिश्च देहादिभिराद्यसम्बन्धविशेषः । तत्तद्दृष्ट-प्रयोज्यः विजातीयसंयोगादिपर्य्यवसितः । मरणञ्च तादृशसम्बन्धनाशः । फलन्तु सुखदुःखयोः साक्षात्कारः स च प्रवृत्त्या दोषेण च जन्यते । एतच्च मुख्यं फलं गौणन्तु देहादिकं सर्व्वमेव । दुःखन्तु अहं दुःखीति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षसिद्धनैसर्गिकद्वेष्यो गुणविशेषः ॥ अपवर्गस्तु अत्यन्तदुःखनिवृत्तिः । स च स्वसमानाधिकरणदुःखासमानकालीनदुःखनाशः । स्वं नाशः सांसारिके दुःखध्वंसेऽतिव्याप्तेः परकीयदुःखमादायासम्भवस्य च वारणाय कालीनान्तं । एष च जाते तत्त्वज्ञाने देहादावात्मत्वादिभ्रमनिवृत्त्या रागाद्यात्मकदोषापायो भवति ततश्च धर्म्माधर्म्मनिवृत्त्या जन्मनिवृत्तौ शरीरादिकारणाभावात् दुःखानुत्पत्त्या सम्पद्यते ॥ संशयस्तु एकधर्म्मिकविरोधावगाहिसाध्यतदभावोभयकोटिकज्ञानं स एवानवधारणं विशेषदर्शनप्रतिबध्यश्च । स च त्रिविधः साधारणधर्म्मज्ञानजोऽसाधारणधर्म्मज्ञानजो विप्रतिपत्तिवाक्यजश्चेति । तत्र साध्यतदभावसमानाधिकरणो धर्म्मः साधारणः । निदर्शनं । अयं स्थाणुत्वस्थाणुत्वाभावसहचरितदैर्घ्यविस्तृतत्वादिमानिति निश्चयानन्तरं अयं स्थाणुर्न वेति संशयो दूरस्थस्य जायते, न जायते च यदि अयं स्थाणुत्वव्याप्यशाखादिमानिति निश्चयः स्यात् । असाधारणस्तु साध्यतदभावासहचरितो धर्म्मः साध्यतदभावसमानाधिकरणाभावप्रतियोगी वा स च गगनादिकः तादृशदैर्घ्यादिको वा । विप्रतिपत्तिश्च साध्यतदभावकोटिद्वयोपस्थापकं वाक्यं । यथा आत्मा सन् इत्येकवाक्यं आत्मा न सन्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यपरवाक्यं तादृशवाक्यद्वयादुदासीनस्य आत्मा सन्न सन् वेति संशयः उत्पद्यते। केचित्तु अर्थनिश्चयोत्तरमर्थसंशयं प्रति अर्थनिश्चये प्रामाण्य संशयस्यापि कारणतया तज्जन्यसंशयमादाय चतुर्धा विभजन्ति। प्रयोजनञ्च यदभीप्सन् माता प्रवर्त्तते तत्। प्रवृत्त्यनुकूलेच्छाया उद्देश्यत्वेन विषयत्वं तु तत्त्वं। तच्च द्विविधं मुख्यं गौणञ्चेति। तत्राद्यं स्वमात्रविषयकज्ञानजन्येच्छाविषयः। तच्च सुखं दुःखाभावश्च। तत्र च तन्मात्रज्ञानादेव ह्रीच्छा जायते। अन्येच्छानधीनेच्छाविषयत्वं मुख्यप्रयोजनत्वमित्यपि केचित्। स्वेतरविषयकज्ञानजन्येच्छाविषयो गौणप्रयोजनं तच्च भोजनादि। तत्र तु भोजनं तृप्तिसाधनमित्यादिज्ञानादेव इच्छाजननादतो भोजनेतरविषयकत्वनियमात्॥ दृष्टान्तो हि लौकिकैः परीक्षकैश्च साध्यसाधनयोस्तत्तदभावयोर्वा सामानाधिकरण्यं यत्र गृह्यते सः। यथा त्रसरेणवः सावयवाश्चाक्षुषद्रव्यत्वात्। यथा घटः। घटे चाक्षुषद्रव्यत्वं सावयवत्वञ्च उभयेऽपि गृह्णन्ति। तत्र लौकिकाः शास्त्रालोचनाभावेऽपि प्राप्तबुद्धिप्रकर्षाः परीक्षकाश्च तर्कप्रमाणैरर्थपरीक्षणशीलाः। सिद्धान्तस्तु प्रमा शास्त्रकारादिभिरभ्युपगतोऽर्थः। प्रमाणादिभिरर्थनिश्चयः सिद्धान्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति केचित्। स च चतुर्विधः सर्व्वतन्त्रसिद्धान्तप्रतितन्त्रसिद्धान्ताधिकरणसिद्धान्ताभ्युपगमसिद्धान्तभेदात्। तत्र सर्व्वशास्त्राविरोधी स्वशास्त्राभ्युपगतोऽर्थः सर्व्वतन्त्रसिद्धान्तः। यथा पृथिव्यादिभूतानि घ्राणादीनीन्द्रियाणि। प्रतितन्त्रसिद्धान्तस्तु समानशास्त्राविरोधी विजातीयशास्त्रविरोधी स्वशास्त्राभ्युपगतोऽर्थः॥ यथा असत् जायते उत्पन्नं स्वरूपं जहाति। एवं मनस इन्द्रियत्वं इत्यादि। एतच्च न्यायवैशेषिकाभिमतं सांख्यादिविरुद्धं। यस्यार्थस्य सिद्धौ जायमानायामन्येऽनुषङ्गिणोऽर्थां ज्ञायन्ते अर्थात् अन्यार्थसिद्धिं विना योऽर्थो न सिद्ध्यति सोऽधिकरणसिद्धान्तः। यथा देहेन्द्रियभिन्नो ज्ञाता एकविषयं चिरं दृष्टवतः स्मृतस्याभेदानुभवहेतुना सिध्यमानः अत्रानुषङ्गिणोऽर्थां इन्द्रियनानात्वं बाल्यस्थविरत्वभेदेन देहभेदा इत्यादयस्तत्सिद्धौ ज्ञायन्ते। एवं क्षित्यादौ सिध्यमानं कर्त्तृजन्यत्वादि अत्रानुषङ्गिणश्च क्षितिकर्त्तुरुपादानादिप्रत्यक्षनित्यत्वादयोऽर्थाः तैर्विना कर्त्तृत्वं न सिद्ध्यति इति॥ अभ्युपगमसिद्धान्तस्तु यत्रापरीक्षितमपि यदर्थमभ्युपगम्य तद्विशेषः परीक्ष्यते सोऽर्थः। यथा अस्तु शब्दो द्रव्यमित्यभ्युपगम्य स तु नित्योऽनित्यो वेति परीक्षा जायते तत्र शब्देऽभ्युपगम्यमानं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रव्यत्वं । केचित्तु साक्षादसूत्रितस्यार्थस्याभ्युपगमोऽभ्युपगमसिद्धान्तः । यथा मनस इन्द्रियत्वं तस्मिन्निन्द्रियत्वस्य साक्षात्सूत्राभावादभ्युपगमाच्चेत्याहुः ॥ अवयवाश्च न्यायान्तर्गतत्वे सति प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यतमाः केचित्तु जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासस्ते चेति दशावयवानाहुः तत्र शक्यप्राप्तिः प्रमाणानां प्रमातुः प्रमेयावगमसामर्थ्यं, प्रयोजनं तत्त्वनिर्णयः, संशयव्युदासः प्रतिपक्षोपवर्णनं, सूत्रकारेण तु आद्यपञ्चकस्य साधकवाक्यघटकत्वाभावादुपेक्षितं । न्यायश्च क्रमोच्चरितपरस्परसाकाङ्क्षप्रतिज्ञादिवाक्यपञ्चसमुदायः । यथा पर्व्वतो वह्निमान् धूमात् यो यो धूमवान् स वह्निमान् यथा महानसं तथाचायं, न च नेयं, तथेति च । तस्मात् धूमाद्वह्निमानयं । व्युत्क्रमप्रयुक्तवाक्यपञ्चकेऽतिव्याप्तिवारणाय क्रमोच्चरितेति । जिज्ञासाभावेऽपि क्रमोच्चरितवाक्यपञ्चकेऽतिव्याप्तिवारणाय परस्परसाकाङ्क्षेति । तत्र प्रतिज्ञा प्रकृतपक्षे प्रकृतसाध्यतावच्छेदकमात्रविशिष्टवैशिष्ट्यावगाहिबोधजनकं वाक्यं । यथा पर्व्वतो वह्निमानिति उदाहरणोपनयनिगमनवारणाय प्रकृतपक्ष इत्यादि । हेतुतावच्छेदक-विशिष्ट-हेतु-हेतुत्व-विशिष्ट-विषयतावद्विभूत-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयताशून्यबोधजनकं हेतुविभक्त्यन्तं वाक्यं यथा धूमादिति। हेतुत्वञ्च ज्ञापकत्वं ज्ञाप्यत्वं वेति निगमनवारणाय वह्निर्भूतेति तत्र हेतौ साध्यवत्ताप्यत्वा-देर्भानात्। स चान्वयी व्यतिरेकी चेति द्विधा। तत्र अन्वयव्याप्त्या साधकत्वानुसन्धानेन प्रयुक्तोऽन्वयी व्यति-रेकव्याप्त्या साधकत्वप्रतिसन्धानेन प्रयुक्तो व्यतिरेकी। उदाहरणन्तु प्रकृतसाध्यसाधनव्याप्त्यौपयिकयत्तत्पदो-पस्थाप्यधर्म्मिक-साध्यसाधनतत्तदभावान्यतरप्रकारक-बोधजनकं वाक्यं। तच्च दृष्टान्तघटितं तदघटितञ्चेति। यथा यो यो धूमवान् स वह्निमान् यथा महानसं। धूमवत् सर्व्वं वह्निमदित्यादिवाक्यवारणाय यत्तदिति। तच्च अन्वयिव्यतिरेकिभेदाद्द्विविधं। तत्र प्रकृतव्या-प्त्यौपयिकयत्तत्-पदार्थधर्म्मिकहेतु-साध्यप्रकारकबोध-जनकं वाक्यमन्वयि। तादृशहेतुसाध्याभावप्रकारक-बोधजनकं वाक्यं व्यतिरेकि। यथा यो न वह्निमान् स न धूमवान् यथा ह्रदः इत्यादि। उपनयस्तु व्याप्ति-विशिष्टहेतुप्रकारकपक्षविशेष्यकबोधजनकं तथा पद-घटितं वाक्यं। यथा तथा चायमिति तथाच धूमवान् पर्व्वत इति वा। नव्यास्तु साध्यव्याप्यहेतुमान् पक्ष इत्येवोपनय इत्याहुः। व्याप्तिश्चास्य प्रकृतानुमित्यौ-पयिकत्वेनान्यतरत्वेन वानुगमनीयं। सोऽपि अन्वयी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यतिरेकी चेति। तत्रान्वयव्याप्तिमद्धेतुविशिष्टपक्ष-बोधकं तादृशं वाक्यं अन्वयी। व्यतिरेकव्याप्तिविशिष्ट-हेतुमत्पक्षबोधकं व्यतिरेकी। यथा न तथा चायं न तथा धूमवान् पर्व्वत इति वा। निगमनन्तु पञ्चम्यन्त-पदोपस्थाप्यसाध्यव्याप्यहेतुज्ञानज्ञाप्यत्वविशिष्ट-साध्य-प्रकारकपक्षविशेष्यकबोधकं वाक्यं। यथा तस्मा-द्वह्निमानयमिति। तस्माद्धूमाद्वह्निमानयमिति वा। स्थानान्तरेण प्रतिज्ञादिलक्षणानि तु न्यायान्तर्गतत्व-विशेषणं प्रक्षिप्य यथायथं वक्तव्यानि॥ आपादकस्य विपरीतकोटिनिश्चयार्थमापत्तिरूपं ज्ञानं तर्कः। तच्च व्यापकाभाववत्त्वेन निश्चिते धर्म्मिणि व्याप्यारोपेण व्यापकारोपात्मकमाहार्य्यरूपं। यथा पर्व्वतो वह्नि-मान्, न वह्निमानिति सन्दिह्य जिज्ञासमानं प्रति पर्व्वतोऽयं यदि निर्व्वह्निः स्यान्निर्धूमः स्यादित्यापादनं क्रियेत यदि तदा स वह्न्यभावज्ञानान्निवर्त्तत्र वह्नि-व्याप्यधूमवानिति निश्चयात् पर्व्वतो वह्निमानित्यव-धारयति। तत्रापादको वह्न्यभावः आपाद्यस्य धूमा-भाव इति। स च तर्कः पञ्चविधः आत्माश्रयान्योन्या-श्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात्। तत्र स्वापेक्षापादकापत्तिरात्माश्रयः। स च स्वापेक्षोत्-पत्त्यापादकस्वापेक्षस्थित्यापादकस्वापेक्षज्ञप्त्यापा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दककभेदेन त्रिधा । यथा घटोऽयं यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यादिति। अत्रैतद्घटजन्यत्वमापादकमेतद्घटभेद आपाद्यश्च तद्घटीयरूपादौ प्रसिद्धं । द्वितीयो यथा घटोऽयं यद्येतद्घटवृत्तिः स्यादेतद्घटभिन्नः स्यादिति। तृतीयं यथा घटोऽयं यद्येतद्घटज्ञानजनकज्ञानविषयः स्यादेतद्घटभिन्नः स्यादिति। अत्र विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् घटत्वेन यदेतद्घटज्ञानं तज्जनकं यद्घटत्वज्ञानं तद्विषयत्वञ्च घटत्वे प्रसिद्धं तत्र घटभेदोऽपि तत्र एतद्घटज्ञानजनकज्ञानविषयत्वञ्च तादृशघटज्ञानत्वावच्छिन्ननिरूपितजनकतावच्छेदकविषयत्वं नातस्तादृशघटज्ञानजनकनिर्विकल्पकादिज्ञानविषये घटे एतद्घटभेदस्य व्यभिचारः। एवं जन्यत्वादेर्जन्यताद्यवच्छेदकत्वे जन्यत्वं यदि स्वज्ञानजनकज्ञानविषयः स्यात् स्वभिन्नं स्यादित्याकारापत्तिर्ज्ञेया अवच्छेद्यग्रहेऽवच्छेदकग्रहस्य हेतुत्वादिति। स्वापेक्षत्वञ्च स्वसत्ताप्रयोज्यसत्ताकत्वम्। स्वोत्पत्तिस्वस्थितिस्वज्ञप्त्यन्यतमापादकप्रसङ्गो वात्माश्रयः। स्वस्य स्वापेक्षत्वेऽनिष्टप्रसङ्ग आत्माश्रय इत्यपि केचित्। स्वापेक्षापेक्षापादकापत्तिरन्योन्याश्रयः। सोऽपि पूर्ववत्त्रिधा। यथा घटोऽयं यद्येतद्घटजन्यजन्यः स्यादेतद्घटभिन्नः स्यादेवं घटोऽयं यदि एतद्घटवृत्तिवृत्तिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादेतद्घटभिन्नः स्यादिति, घटोऽयं यद्येतद्घटप्रकारक-ज्ञान-जनक-ज्ञानजनकज्ञानविषयः स्यादेतद्घटभिन्नः स्यादिति। चक्रकमपि स्वापेक्षापेक्षापेक्षापादककापत्तिः इदमपि पूर्व्ववत्त्रिविधं। उदाहरणन्तु घटोऽयं यद्येत-द्घटजन्यजन्यजन्यः स्यादेतद्घटभिन्नः स्यादित्यादिरीत्या ज्ञेयं। अत्रापादकन्तु तद्घटक्रियाजसंयोगजन्यशब्दादौ प्रसिद्धमिति। अप्रामाणिकानन्तप्रवाहमूलकप्रसङ्गोऽ-नवस्था। यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्यात् घटा-श्ववृत्ति स्यात्। तत्राप्रामाणिकः स्वमात्रकल्पितो यो घटानामनन्तप्रवाहः तन्मूलक एव प्रसङ्गो जायते। तन्मूलकत्वञ्च तज्ज्ञानाधीनसम्भावनाविषयापादक-त्वं सम्भाव्यते च तर्हि यावद्घटान प्रति घटानां कार-णत्वं यदि घटधारा अनन्ता स्यात् घटधारायाविच्छेदे तु घटे कस्यचिद्घटस्याव्यवहितपूर्व्ववर्त्तित्वाभावनिश्चये कारणत्वशङ्कैव नोदेति यन्निरासकस्तादृशस्तर्क इति। अप्रामाणिकेत्यनेन यावदङ्कुरकारणत्वं यदि वीजवृत्ति स्यादङ्कुरजन्यतावच्छेदकव्याप्यं स्यादित्यापत्तिर्न तस्य वीजावृत्तित्वसाधिका, वीजाङ्कुरप्रवाहेऽनादित्वस्य प्रामाणिकत्वात्। अनन्तत्वं सीमाराहित्यं। सीमा च कालिकी दैशिकी चेति॥ त्रसरेणोरवयवो यदि द्रव्यत्वे सति सावयवजन्यः स्यात् महान् स्यादित्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दावारम्भकनिष्ठसावयवत्वाभावादिरूपा दैशिकी ज्ञेया केचित्तु अव्यवहितपरम्परारोपाधीनानिष्ठप्रसङ्गोऽनवस्थेत्याहुः॥ तदन्यः प्रसङ्गः प्रमाणबाधितार्थकप्रसङ्गः। सोऽपि द्विविधः व्याप्तिपरिच्छेदको विषयपरिशोधकश्चेति। आद्यो यथा धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादि। द्वितीयो यथा पर्व्वतो यदि निर्व्वह्निः स्यान्निर्धूमः स्यादित्यादि। निर्णयस्तु अवधारणात्मकं ज्ञानं। अवधारणञ्च तदभावाप्रकारकत्वे सति तत्प्रकारकमेकधर्म्मिकं। स च क्वचित् इन्द्रियार्थसन्निकर्षमात्रात्। यथा अयं घटः इत्यादि। संशयानन्तरञ्च विशेषदर्शनसहकृतात्। यथा अयं स्थाणुर्न वेति संशयानन्तरं स्थाणुत्वव्याप्यशाखादिमानिति निश्चयात् अयं स्थाणुरिति। परीक्षास्थले प्रमाणतर्कादिना विरुद्धयोः पक्षयोरेकतरस्य निवर्त्तनं अवस्थितापरस्यावधारणं। यथा आत्मा नित्यो न नित्य इति विप्रतिपत्त्यनन्तरं युक्त्या आत्मा नित्य इत्यादि। तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति भाष्यं। तत्र कथा तु तत्वनिर्णयविजयान्यतरफलकन्यायादिघटित-साधक-प्रतिषेधकवचनसन्दर्भः। जायते हि तत्र न्यायादिना एकतरस्य सिद्धिर्हेत्वाभासाद्युद्भावनेन चापरस्य प्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षेधश्च। तासां वादस्तु स्वमतसिद्धान्ताविरुद्धतत्त्व-निर्णयप्रतिषेधमात्रफलकः पञ्चावयवघटितवाक्यसमूहः। यत्र उभावपि पक्षौ स्थापनाहेतुतः प्रवृत्तौ भवतस्तत्र वादत्ववारणाय प्रतिषेधेति। मात्रपदेन विजयव्यवच्छेदात् जल्पवारणं। यत्र पञ्चावयवं विनापि प्रमाणतर्कैः स्थापनाप्रतिषेधश्च भवति सोऽपि वाद इति भाष्यकारः। जल्पस्तु पराजयफलकं स्वप्रयुक्तार्थोपपादकं न्यायच्छलादिघटितं वाक्यं। विजयश्च अपकृष्टत्वज्ञापनं। प्राच्यैस्तु विजिगीषोः कथा जल्प इत्युक्तं॥ वितण्डा च स्वप्रयुक्तानुपपादकपरपक्ष-प्रतिषेधकं तादृशं वचोवृन्दं। वैतण्डिकस्तु प्रतिज्ञातमर्थं न स्थापयति परपक्षप्रतिषेधेनैव च प्रवर्त्तते इति॥ हेत्वाभासास्तु हेतुवदाभासन्ते इति व्युत्पत्त्या हेतुत्वाभाववत्वे सति साधकत्वेन कल्पिताः। हेतुत्वञ्च पक्षसत्वादि। दुष्टहेतव इति तु पर्य्यवसिताः। दोषस्तु पक्ष-साध्यवान् साध्यव्याप्यहेतुमानित्यनुमितिविरोधिज्ञानविषयः। व्यभिचाराद्यन्यतमो वा। ते च सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीताश्चेति पञ्च। तत्र व्यभिचारेण सह वर्त्तमानः सव्यभिचारः। व्यभिचारश्च साध्यसाधनग्रहाविरोधि-हेतुधर्म्मिकसाध्यव्याप्तिग्रहविरोधिग्रहविषयः। व्याप्तिश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्वयतो व्यतिरेकतश्च निवेशनीया। सोऽपि साधारणासाधारणानुपसंहारिभेदात् त्रिविधः। तत्र साधारणस्तु साध्याभाववद्वृत्तिर्हेतुः यथा नित्यः शब्दोऽस्पर्शत्वादिति। असाधारणस्तु साध्यसामान्याधिकरण्याभाववद्धेतुः यथा इदं द्रव्यं श्रावणत्वादिति। अनुपसंहारी तु हेत्वभावादौ साध्याभावव्यापकत्वाभावादि। यथा धूमवान् वह्नेरित्यादि॥ विरुद्धस्तु विरोधी हेतुः। विरोधश्च पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वं तादृशप्रतियोगित्वमात्रं वा यथा घटादौ जन्यत्वासाधने सदातनत्वादि। साध्यसमस्तु असिद्धः। असिद्धिस्तु व्यभिचाराजन्यत्वे सति साध्यव्याप्यो हेतुमान् पक्ष इत्यनुमितिविरोधिज्ञानविषयः। सापि त्रिधा आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिश्चेति। तत्राद्या पक्षतावच्छेदकाभाववत्पक्षः। यथा व्योमकमलं सुरभि कमलत्वादित्यादि। द्वितीया यथा जलमिदं रम्यं सुरभित्वादित्यादि। अन्त्या च अव्यभिचारसाध्यसामान्याधिकरण्योभयाभाववद्धेतुः। यथा अयमश्वः सास्नावत्त्वादित्यादि। एवं साध्यतावच्छेदकाभाववत्साध्यं साधनतावच्छेदकाभाववत्। साधनञ्च निदर्शनं। सर इदं नीलजलवत् तत्त्वेन प्रतीयमानत्वात्। पर्वतो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वह्निमान् काञ्चनमयधूमादित्यादि ॥ अथवा साध्य-वत् साधनमपि यत्र पक्षे साधनीयं भवति स साध्य-समः। यथा छाया द्रव्यं गतिमत्त्वादित्यादि। अत्र छायायां द्रव्यत्वस्येव गतिक्रियाया अपि सन्दिग्धत्वेन सिद्धिरावश्यकी। प्रकरणसमस्तु पक्षसाध्यग्रहाविरो-धिनी पक्षे साध्यवैशिष्ट्यग्रहस्य प्रतिबध्यत्वे सति विरोधिनी या अनुमितिः तज्जनकज्ञानविषयः। उदाहरणं ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाव-व्याप्यजलादिकं। विशेषणद्वयेन काञ्चनमयह्रदप-क्षके काञ्चनमयत्वाभावव्याप्यवद्ह्रदे वह्न्यभावव्याप्य-व्याप्यवद्ह्रदादौ च नातिव्याप्तिः। अथवा तुल्यबल-विरोधिपरामर्शकालीनप्रकृतपरामर्शविषयो हेतुः॥ कालातीतो बाधितो हेतुः। बाधश्च पक्षविशेष्यक-साध्यप्रकारकत्वावच्छिन्नं प्रति प्रतिबध्यः सन् विरोधी यो निश्चयस्तद्विषयः। स च साध्याभाववत्-पक्षादिरेव। उदाहरणन्तु ह्रदो वह्निमान् धूमादि-त्यादि। सन्नन्तेन वह्न्यभावव्याप्यवद्ह्रदादौ नाति-व्याप्तिः। ह्रदो वह्निव्याप्यवानित्यादौ वह्न्यभाववद्ह्रदा-दावतिव्याप्तिवारणाय विशेष्यदलं पक्षविशेष्यकत्वादेः स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशात् पक्षासिद्ध्या-दौ नातिव्याप्तिः। अवृत्तिसाध्यादिकन्तु न बाधः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नातस्तत्राव्याप्तिः ॥ प्राञ्चस्तु कालात्ययेनासिद्धो हेतुर्व्वा कालातीतः। यथा शब्दः पूर्व्वमवस्थितः संयोगव्यङ्ग्यत्वात् रूपवत् रूपं हि पूर्व्वमवस्थितं जाते घटादावालोकसंयोगे यथा व्यज्यते तथा प्रागवस्थित एव शब्दो भेरीदण्डादिसंयोगाद्व्यज्यते। अत्र सति चालोकसंयोगे रूपस्य व्यक्तिर्भवति, असति च तस्मि-न्नात आलोकसंयोगस्य रूपव्यक्तिं प्रति कारणत्वं। शब्दस्य व्यक्तिस्तु नष्टेऽपि भेरीदण्डसंयोगे भवति दूरस्थस्य तस्मात् शब्दव्यक्तौ तादृशसंयोगस्य कारणत्व-विरहात् संयोगव्यङ्ग्यत्वमसिद्धमेवेत्याहुः ॥ वक्तुरभि-प्रेतादर्थादर्थान्तरकल्पनया दूषणाभिधानं छलपदार्थः। तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छल-ञ्चेति। यथा नवकम्बलोऽयं मानवक इति वाक्यस्य नवीनकम्बलोऽस्येति वक्तुरभिप्रेतादर्थात् नवसंख्यकाः कम्बला अस्येत्यर्थान्तरं प्रकल्प्य दरिद्रस्यास्य कुतो नव सम्भवन्तीति दूषणाभिधानं। सामान्यच्छलस्तु वि-शेषाभिप्रायेण सम्भवद्विधेयरूपार्थकस्य वाक्यस्य सामान्यधर्म्मावच्छेदेन विधेयवत्वकल्पनया व्यभि-चारेणासम्भवद्दूषणाभिधानं। यथा ब्राह्मणोऽसौ विद्याचरणसम्पन्न इति वाक्यप्रयोगे ब्राह्मणत्वेनास्य विद्याचरणसम्पन्नत्वं प्रकल्प्य कश्चिदाह यो ब्राह्मणः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स विद्याचरणसम्पन्नश्चेत् भवतु तदा व्रात्योऽपि विद्या-
चरणसम्पन्नः यतो व्रात्योऽपि ब्राह्मण इति। विद्यया
वेदार्थज्ञानं तज्जन्यसंस्कारो वा आचरणं वेदविहिता-
नुष्ठानं॥ उपचारच्छलन्तु एकवृत्त्या प्रयुक्ते शब्दे
अन्यवृत्त्या अयोग्यताप्रतिपादनं। यथा मञ्चाः
क्रोशन्ति श्यामलश्चलतीत्युक्ते मञ्चस्थाः पुरुषा एव
क्रोशन्ति, न तु मञ्चा नीलरूपाश्रयश्चलति, न तु
नीलरूपं इत्ययोग्यतां प्रतिपादयति॥ ननूपारच्छल-
स्यापि वक्तुरभिप्रेतादर्थान्तरकल्पनारूपत्वात् कुतः न
वाक्छलान्तर्भूततया कुतः पृथगुपन्यास इति चेन्न
प्रथमे वाक्यस्यार्थान्तरकल्पनं शेषे तु पदस्य वृत्त्यन्त-
रेणार्थान्तरकल्पनमिति तयोर्वैषम्यात् तस्मात् चरम-
स्यार्थान्तरसद्भावकल्पनाघटितत्वाद्वा तयोर्वैषम्यात्।
उपधेयसङ्करेऽपि उपाध्यसङ्कराच्च। अन्यथा सामा-
न्यतः प्रतिषेधकत्वेन त्रयाणामैक्यप्रसङ्गाच्चेति॥ सा-
धर्म्म्यवैधर्म्म्यान्यतरमात्रेण दूषणाभिधानं जाति-
पदार्थः। व्याप्त्यनपेक्षेण हेतुना दूषणारोप इति
तु फलितं। अतएव असदुत्तरं जातिरिति प्राच्यै-
र्गीयते। ता जातयः साधर्म्म्यसमवैधर्म्म्यसमोत्कर्ष-
समापकर्षसमवर्ण्यसमावर्ण्य-समविकल्पसम-साध्यसम-
प्राप्तिसमाप्राप्तिसमप्रसङ्गसमप्रतिदृष्टान्तसमानुत्पत्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समसंशय-समप्रकरणसमहेतु-समार्थापत्ति-समाविशेष-समोपपत्तिसमोपलब्धिसमानुपलब्धिसमनित्यसमानित्यसमकार्य्यसमभेदात् चतुर्व्विंशति वा। तत्र वादिना साधर्म्म्यहेतुना साध्यसाधने प्रतिवादिनः साध्यव्यतिरेकसहचरितहेतुना प्रतिषेधनं साधर्म्म्यसमः। यथा निष्क्रिय आत्मा विभुत्वात् यथा गगनं इत्येवं वादिप्रयोगे प्रतिवादिनः आत्मा यदि गगनसाधर्म्म्येण विभुत्वेन निष्क्रियः स्यात्तदा सक्रियघटसाधर्म्म्येण संयोगवत्त्वेन सक्रियः स्यादिति प्रतिषेधापादनं। साध्यवैधर्म्म्यहेतुना साध्यस्योपसंहरणे तद्वैधर्म्म्यहेतुना प्रतिवादिनः साध्यप्रतिषेधापादनं स वैधर्म्म्यसमः। यथा अनित्यः शब्दो जन्यभावत्वात् यन्नैवं तन्नैवं गगनवदित्युपसंहारे, शब्दो यदि गगनवैधर्म्म्येण जन्यभावत्वेनानित्यः स्यात्तदाऽनित्यघटवैधर्म्म्येण श्रावणत्वेन नित्यः स्यादिति प्रतिवादिन आपादनं॥ दृष्टान्तभाविण हेतुसहचरितधर्म्मान्तरस्य पक्षे आपादनं उत्कर्षसमः। निदर्शनं। आत्मा क्रियावान् क्रियाहेतुगुणयोगात् लोष्ट्रवदिति प्रयोगे आत्मा यदि क्रियाहेतुगुणयोगेन क्रियावान् तदा स्पर्शसमानाधिकरणेन तेन स्पर्शवानपि स्यादिति। अपकर्षसमस्तु पक्षे दृष्टान्ते वा सहचरितधर्म्मस्याभावेन हेतुसाध्यानतराभावापादनं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा आत्मा यदि निष्क्रियत्वसाधर्म्म्येण विभुत्वेन निष्क्रियः स्यात्तदा निष्क्रियत्वसहचरितस्य शब्दस्याभावेन निष्क्रियत्वाभाववान् स्यादित्यादीति नव्याः ॥ दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं। वर्ण्यसमः। पक्षे च दृष्टान्तधर्म्मस्य निश्चितसाध्यकत्वस्यावर्ण्यत्वस्यापादनमवर्ण्यसमः। यथा पर्व्वतो वह्निमान् धूमादित्यादौ पर्व्वतो यदि वह्निसहचरितेन धूमेन वह्निमान् स्यात् तदा सन्दिग्धसाध्यकत्वसहचरितेन तेन तेन महानसमपि सन्दिग्धसाध्यकं स्यात्। एवं निश्चितसाध्याकत्वसहचरितेन तेन पर्व्वतो निश्चितसाध्यकः स्यादित्यादि ॥ साधनयुक्ते दृष्टान्ते धर्म्मान्तरविकल्पं दर्शयित्वा, साध्यधर्म्मविकल्पमापादयतः प्रत्यवस्थानं विकल्पसमः। यथा घटः क्रियावान् क्रियाहेतुगुणयोगादित्युक्ते क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु यथा लोष्टः किञ्चिदगुरु यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किञ्चित्क्रियावत् यथा लोष्टः किञ्चिदक्रियं यथा आत्मा इति। हेत्वादावन्यस्य व्यभिचारदर्शनेन साध्यव्यभिचारापादनं विकल्पसमः यथा कृतकत्वादिकं यथा गुरुत्वादिकं व्यभिचरति तथा अनित्यमपि व्यभिचरेदिति नव्याः। दृष्टान्ते साध्यत्वमापादयतः प्रत्यवस्थानं साध्यसमः। साध्यत्वञ्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हेत्वाद्यवयवप्रयोज्यानुमितिविशेष्यत्वम्। निदर्शनम् यदि यथा लोष्टस्तथा आत्मा प्राप्तस्तर्हि यथा आत्मा तथा लोष्टः, आत्मा च क्रियावत्त्वेन साध्यस्तर्हि लोष्टोऽपि साध्यः इति ॥ प्राप्त्या प्रतिषेधनं प्राप्तिसमः प्राप्त्यविशेषेण असाधकत्वापादनमिति तु फलितम्। प्राप्तिस्तु विद्यमानस्य सम्बन्धः। यथा हेतुर्यदि साध्यं प्राप्य साधयेत्तर्हि प्राप्त्यविशेषेण साध्यमपि हेतुं साधयतु। द्वयोर्हि विद्यमानयोः सत्त्वे सति किं कस्य साधकं साध्यं वा भवेदिति ॥ अप्राप्त्या निषेधोऽप्राप्तिसमः। यथा हेतुर्यदि साध्यमप्राप्य साधयेत् तर्हि न साधयेत्, यथा दीपो घटादिकमप्राप्य न साधयति ॥ दृष्टान्तस्य साधनवत्त्वादिसाधकं वक्तव्यमित्युद्भावनेन प्रतिषेधः प्रसङ्गसमः। यथा महानसं धूमवत् वह्निमच्चेत्यत्र हेतुर्वक्तव्यो न हि हेतुमन्तरेण सिद्धिरस्तीति ॥ प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। यथा यदि दृष्टान्तबलेनानित्यः शब्दः स्यात्तदा आकाशदृष्टान्तबलेन नित्यो भवतु इति नव्याः। प्रतिदृष्टान्तेन प्रतिषेधः प्रतिदृष्टान्तसमः। आत्मा क्रियावान् क्रियाहेतुगुणयोगादिति लोष्टवदित्युक्ते प्रतिदृष्टान्तः प्रयुज्यते। यथा क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियमिति तु भाष्यकारः। अनुत्पत्तिसमस्तु, उत्पत्तेः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्व्वंकारणाभावेनानुत्पत्त्या प्रत्यवस्थानम् । यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदिति प्रयोगे प्रतिवादी ब्रूते उत्पत्तेः पूर्व्वमनुत्पन्ने शब्देऽनित्यत्व-कारणं प्रयत्नजन्यत्वं नास्त्यतो नित्यत्वं प्राप्तं । नित्यस्य चोत्पत्तिर्नास्ति कुतस्तादृशहेतुमत्त्वमित्यभिमन्वानः । नव्यास्तु उत्पत्तेः पूर्व्वं हेत्वाद्यभावेन प्रत्यवस्थानं अनु-त्पत्तिसमः । यथा घटो रूपवान् गन्धात् पटवदि-त्युक्ते रूपोत्पत्तेः पूर्व्वं हेत्वभावादसिद्धिरित्याहुः । यथाकथञ्चित् संशयकारणबलात् संशयेन प्रत्यवस्थानं संशयसमः । यथा अनित्यः शब्दः कृतकत्वादित्युक्ते अपर आह यथा कृतकत्वेनानित्यत्वं निर्णीयते, तद्वत् नित्यानित्यसाधारणेन्द्रियकत्वादिना सन्दिह्यतामनित्य-त्वमिति ॥ अधिकबलतयारोपितविरोधिप्रमाणेन बाधात् प्रत्यवस्थानं प्रकरणसमः । यथा अनित्यः शब्दः कृतकत्वादिति प्रयोगे मैवं ब्रूयः नित्यत्वसाधकेने-न्द्रियकत्वेन बाधादिति प्रतिवादिवचनम् ॥ हेतौ साध्यस्य पूर्व्वपश्चाद्वर्त्तमानकालत्रयवृत्तितया साधकत्व-खण्डनेन प्रत्यवस्थानमहेतुसमः । यथा धूमादिकं वह्न्यादेः पूर्व्वं यदि तत्साधयेत्तदा असति वह्न्यादिके कस्य सिद्धिर्भवेत्, अथ चेत् परं तदा पूर्व्वं साधनासत्त्वेन कस्येदं साध्यम् । यदि सहवर्त्ति तदा द्वयोः सतोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं कस्य साध्यं साधनं वेति। अर्थापत्त्या प्रतिपक्ष-स्थापनेन प्रत्यवस्थानमर्थापत्तिसमः। यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्तेरनित्यसाधर्म्येण तेनानित्यः शब्द इत्यर्थादापद्यते च नित्यसाधर्म्येण स्पर्शत्वेन नित्यः शब्द इति। वाद्युक्तहेतुना साध्य-वत्त्वेन पक्षदृष्टान्तयोरविशेषमापदकीकृत्य सद्भावा-दिना सर्वेषामविशेषप्रसङ्गात् प्रत्यवस्थानमविशेष-समः। यथा यदि अनित्यत्वसाधर्म्येण कृतकत्वेन शब्दघटयोरनित्यत्वेनाविशेषः स्यात्तदा सद्भावादिना सर्वेषामविशेषः स्यादिति। साध्यस्य साध्याभावस्य च साधनप्रदर्शनेन प्रत्यवस्थानमुपपत्तिसमः। यथा सति अनित्यत्वसाधने कृतकत्वे शब्दो यद्यनित्यस्तदा नित्यत्वसाधनस्य श्रावणत्वस्य सत्त्वेन नित्यः शब्दो भवत्विति॥ वादिवचनं सावधारणमभिमन्वतो निर्द्दिष्टस्य साधनस्याभावेऽपि साध्यधर्म्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः। यथा, अनित्यत्वसाधनस्य प्रयत्नसाध्यत्वस्य विरहेऽपि बलवद्वाताभिघाताद्वृक्ष-शाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते॥ आवरणा-द्यनुपलब्धेरनुपलम्भात्तदभावसिद्धौ आवरणसत्त्वापत्त्या प्रत्यवस्थानमनुपलब्धिसमः॥ नित्यः शब्दः श्रावण-त्वादित्यादिमीमांसकोक्तौ शब्दो यदि नित्यः स्यात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुच्चारणादुपलभ्येत न स्यादेवं तदा यदि तदावरणमस्ति भित्त्याद्यावृतघटादिवत् तदेव न यतस्तदावरणमेव नास्ति अनुपलब्धेरिति प्रतिवाद्युक्ते, यद्यनुपलब्ध्या अभावः सिध्येत्तदा तदावरणानुपलब्धेरनुपलम्भात्तदभावसिद्धौ आवरणमेव सिध्यतीत्यतो नित्यत्वं पुनः प्राप्नोतीति ॥ साधर्म्यमात्रेण सर्व्वत्रानित्यत्वादिसाधनवत्त्वापादनेन निषेधनमनित्यसमः। यथा शब्दो यद्यनित्यत्वसाधर्म्येण कृतकत्वेनानित्यः स्यात्तदा तत्साधर्म्येण प्रमेयत्वेन सर्व्वमनित्यं स्यादिति ॥ नित्यसमस्तु नित्यत्वेन प्रत्यवस्थानम्। यथा अनित्यः शब्द इति प्रतिज्ञायते तदनित्यत्वं शब्दे किं नित्यमनित्यं वा। यदि सदातनं तदा धर्म्मस्य सदातनत्वेन धर्म्मिणोऽपि सदातनत्वं धर्म्मधर्म्मिणोरभेदात् इति नित्यः शब्द इति। अथानित्यं तदा अनित्यत्वशून्यतादशायां नित्यः शब्द इति रक्तताविरहदशायां घटोऽयं न रक्त इतिवत् ॥ कार्य्यसमस्तु प्रयत्नसाध्यस्यानेकविधत्वं दर्शयित्वा प्रत्यवस्थानम्। यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नसम्पाद्यश्च नानाविधो दृश्यते, एकः कुलालादेः प्रयत्नानन्तरं घटादेरात्मलाभः। अपरश्च व्यवधानापसरणेन व्यवहितानामभिव्यक्तिः तत् किं भेरीदण्ड-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संयोगप्रयत्नानन्तरं शब्दस्य स्वरूपलाभः उताभि-व्यक्तिरविशेषादभिव्यक्तौ च नित्यत्वमपि सम्भ-वेदिति। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। तानि तु प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञा-तार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननु-भाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञा पर्य्यनुयोज्यो-पेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्चेति द्वाविंशतिविधानि॥ तत्र विरोधिपक्षीयदृष्टान्तधर्म्मस्य स्वीयदृष्टान्ते स्वीकरणं प्रतिज्ञाहानिः। यथा अनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्युक्ते, दृष्टं हि सामान्य-मैन्द्रियकं नित्यं शब्दोऽपि कस्मान्न तथा इत्यपर-प्रतिषेधने वदतीदं सामान्यमैन्द्रियकं नित्यं खलु घटोऽपि नित्योऽस्त्विति॥ प्रतिज्ञान्तरं तु प्रतिज्ञार्था-दीनां परेण कृते प्रतिषेधे तत् परीहारेच्छया विशिष्य पुनस्तदर्थनिर्देशः। यथा क्षितिः सकर्त्तृका कार्य्यत्वा-दिति प्रयोगे परेण नित्यक्षितौ बाधोद्भावने, अस्तु जन्यक्षितिः सकर्त्तृकेत्यादिवादिवचनम्॥ प्रतिज्ञा-हेत्वोः परस्परविरुद्धार्थप्रतिपादकत्वं प्रतिज्ञाविरोधः। उदाहरणम्। द्रव्यं गुणभिन्नं रूपादिभ्यः पदार्था-न्तरानुपलब्धेरित्युक्तौ यदि गुणव्यतिरिक्तं द्रव्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवेत्तदा रूपादिभ्यः पदार्थान्तरस्यानुपलब्धिर्नोप-
पद्यते सती चेत्ताद्दृशानुपलब्धिस्तदा द्रव्यं गुणभिन्न-
मिति न संगच्छते ॥ प्रतिज्ञासन्न्यासस्तु परेण प्रति-
षेधोपन्यासे प्रतिज्ञातार्थनिह्नवः। यथा अनित्यो
घट ऐन्द्रियत्वादित्युक्ते ऐन्द्रियकं सामान्यं नित्यमिति
दर्शिते व्यभिचारे यदि ब्रुयात् क एवमनित्यो घट
इति वक्ति ॥ अविशेषेणोक्ते हेतौ परेण प्रतिषिद्धे
तदुद्दिधीर्षया विशिष्य अतिरिच्य वा पुनर्हेत्वभिधानं
हेत्वन्तरं। यथा पर्व्वतो वह्निमान् धूमादित्यत्र देशा-
न्तरवर्त्तिखण्डधूमे परोक्षाविते व्यभिचारेऽविच्छिन्न-
मूलकधूमात् तदीयालोकाद्वेति पुनर्व्वचनम्। पूर्व्व-
हेतोरसाधकत्वेनास्य वक्तुर्निग्रहस्थानत्वं ॥ अर्थान्तरन्तु
साध्यसिद्ध्यप्रयुक्तार्थं परित्यज्यार्थान्तरकथनं। तदनु-
पयुक्तार्थकथनमिति तु पर्य्यवसितं। यथा घृतमिदं
पृथिवीगन्धवत्वादित्युक्त्वा गन्धो गुणः सुरभिरसुरभि-
श्चेत्यादिकथनं ॥ वर्णानां क्रमनिर्द्देश इवार्थरहितं
वाक्यं निरर्थकं। यथा नित्यः शब्दः कचटतपाः जब-
गड़दशत्वात् झड़घढधवदिति न ह्येतेन कोऽप्यर्थः
प्रतीयते। समयबद्ध' विनेति विशेषणीयं, तेनाप-
भ्रंशस्य विपर्थकत्वेऽपि समयबद्धत्वे तेन विचारे न
दोषः ॥ अविज्ञातार्थञ्च त्रिरभिहितमपि यद्वाक्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्लिष्टाप्रसिद्धपदादिदोषेण परिषदा प्रतिवादिना चा-
प्रतीयमानार्थकं, यथा श्वेतो धावति, अयं नदीं हन्ति
तत्वेन प्रतीयमानत्वादित्यादि ॥ यादृशवाक्यसमुदाये
आकाङ्क्षाद्यभावेन परस्परमन्वयबोधजनकत्वं नास्ति
तत्समुदायोऽपार्थकः । यथा दश दाड़िमाः षट् पूपाः
कुण्डमजाजिनमित्यादि ॥ अवयवानां वैपरीत्येन वचन-
मप्राप्तकालं । वैपरीत्येनाकाङ्क्षातिक्रमेण । यथा
यो यो धूमवान् स वह्निमान् धूमात् वह्निमान्
पर्व्वत इति ॥ अवयवानामेकतरहीनमवयवाभिधानं
न्यूनं निग्रहस्थानं । विना समयबद्ध तेन असाध-
कतानुमाने उदाहरणाप्रयोगेऽपि न न्यूनमिति
केचित् ॥ अधिकन्तु हेतूदाहरणद्वयाद्यभिधानं ।
यथा पर्व्वतो वह्निमान् धूमात् आलोकात् यथा
महानसं चत्वरं चेति । विना समयबद्धं तेन सति
समयबद्धे तद्द्वयप्रयोगेऽपि न निग्रहस्थानं । समय-
बन्धो हि विचारस्य क्रमविषयादीनां नियमेनाव-
धारणं ॥ अनुवादान्यत्वे सति पुनर्व्वचनं पुनरुक्तं ।
तच्च द्विविधं शब्दपुनरुक्तम्, अर्थपुनरुक्तञ्च । आद्यन्तु
एकानुपूर्व्वीकैकार्थकशब्दद्वयवचनं । यथा पर्व्वतो
वह्निमान् पर्व्वतो वह्निमानिति । द्वितीयन्तु
विभिन्नानुपूर्व्वीकतादृशशब्दद्वयवचनं ॥ यथा पर्व्वतो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वह्निमान् गिरिरग्निमानिति। अनुवादस्य तु विवृति-रूपादेरन्यार्थप्रकाशप्रयोजनत्वेन न निग्रहस्थानत्वं। अर्थवशाल्लब्धस्यार्थस्य पुनर्व्वचनमपि पुनरुक्तं। यथा अनित्यशब्दः कृतकत्वादित्युक्त्वा अकृतकं नित्य-मिति वचनमस्यार्थापत्त्या प्रकारान्तरप्रतीतत्वात्॥ परिषदा विज्ञातस्य वाक्यार्थस्य वादिना त्रिरभिहित-स्यापि यत्र नानुवादस्तदनुभाषणं त्रिरित्यनेन एक-कृत्वो द्विर्वाभिधाने ऽप्रत्युच्चारणं न निग्रहस्थान-मिति॥ परिषदा विज्ञातस्य वादिना त्रिरुक्तस्यार्थ-स्याज्ञानमविज्ञातं। एतच्च किं कथयसि न बुध्यते इत्यादि कथनेन प्रकाशते॥ परोक्तार्थं विज्ञातवतो-ऽपि उत्तरस्यानुपस्थितिरप्रतिभा। उत्तरन्तु परपक्ष-निवर्त्तनं॥ इदमिदानीं मे करणीयमस्ति साधिते च तस्मिन्नुत्तरयिष्यामीत्येवं कार्य्यव्यासङ्गमुद्भाव्य कथाविच्छेदकरणं विक्षेपः। अयञ्चोत्तरस्फुर्त्तावपि प्रतिवादिदूषणादिकं सम्भावयतो भवेत्॥ स्वपक्षे दत्तदोषमनुद्धृत्य परपक्षे दोषोद्भावनं मतानुज्ञा। निदर्शनं। क्षितिः सकर्त्तृका कार्य्यत्वादित्युक्ते क्षिति-र्न तथा शरीराजन्यत्वादिति प्रतिषेधिनापरेणाङ्कुरादौ दत्तव्यभिचारदोषमनुद्धृत्य यत्र तव हेतुर्व्याप्यत्वा-सिद्ध इति वादिवचनं। निग्रहस्थानं प्राप्तं प्रतिनिग्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हस्थानस्यानन्नुद्भावनं पर्य्यनुयोज्यापेक्षणं। एतच्च परिषदैव दर्शनीयं न तु निग्रहप्राप्तेन न हि कोऽपि निजकौपीनं विवृणोति॥ असति निग्रहस्थाने निग्रहस्थानोद्भावनं निरनुयोज्यानुयोगः कथायां प्राक्स्वीकृतसिद्धान्तप्रच्युतिरपसिद्धान्तनिग्रहस्थानं। प्रच्युतिरन्यथाकरणं। शास्त्रकाराभ्युपगतोऽर्थः सिद्धान्तः। यथा सच्च स्वरूपं न जहाति असच्च न स्वरूपं लभते एकप्रकृतिकमिदं जगत् सदेव आविर्भावतिरोभाववशात् क्वचिद्व्यक्तमव्यक्तञ्चेति सांख्यमतं स्वीकृत्य, कथामारभमानं प्रति आविर्भावः सन् असन वा यदि सन् तदा सर्व्वं सर्व्वदा वक्तं स्यात्, यद्यसन् तर्हि अकिञ्चित्करेण तेन किं सुतरां तथा लभ्यते आविर्भावस्याविर्भावाभ्युपगमेऽनवस्था स्यादिति प्रतिषेधने तेनासत आविर्भावस्योत्पत्तेरङ्गीकरणं॥ हेत्वाभासाश्च पूर्व्वं निरुक्ता एव। नव्यास्तु सूत्रस्थचकारस्यानुक्तसमुच्चायकत्वेन दृष्टान्तवृत्तिसाधनवैकल्यादीनां परिग्रह इत्याहुः॥

इति श्रीहरिनाथतर्कसिद्धान्तविरचितायां न्यायतत्त्वप्रबोधिन्यां प्रथमः परिच्छेदः।

PRINTED BY PITAMBER BANERJEA. 2. NABABDI OSTAGAR'S LANE
1890.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# বিজ্ঞাপন।

নিম্নলিখিত পুস্তকগুলি কলিকাতা ১৪৮ নং বারাণসী ঘোষ ষ্ট্রীট, সংস্কৃত যন্ত্রের পুস্তকালয়ে, ও বানারস চাদনীচকের উত্তর নূতন সড়ক ব্রজভূষণ দাস কোম্পানীর দোকানে, এবং আমার নিকট পাওয়া যায়।

| | | মূল্য | | ডাক্‌মাশুল |
|---|---|---|---|---|
| সটীক শক্তিবাদ (সম্পূর্ণ) | ... | ২॥০ | ... | ⁄১০ |
| সটীক মুক্তিবাদ (বঙ্গাক্ষরে) | ... | ॥০ | ... | ✓১০ |
| সারমঞ্জরী ... ... | ... | ।০ | ... | ✓১০ |
| ন্যায়তত্ত্ব-প্রবোধিনী ... | ... | ৵০ | ... | ✓১০ |

## বিশেষ বিজ্ঞাপন।

সটীক শক্তিবাদ পুস্তক ইতিপূর্ব্বে সামান্য কাণ্ড পর্য্যন্ত প্রকাশিত হইয়াছিল, এক্ষণে উক্ত পুস্তক সম্পূর্ণ মুদ্রিত হইয়াছে, পূর্ব্বে যাঁহারা সামান্যকাণ্ড পর্য্যন্ত পুস্তক লইয়াছেন, তাহারা শেষ খণ্ড ১৸০ মূল্যে পাইবেন। কেবল প্রথম খণ্ড কেহ পাইবেন না। ব্যয় অধিক হওয়ায় শক্তিবাদের মূল্য ২৲ স্থানে ২॥০ টাকা করা গেল। ইতি।

প্রকাশক
শ্রীসর্ব্বেশ্বর ভট্টাচার্য্য।
নবদ্বীপ
(নদীয়া)

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

